# दुर्लभ बौद्ध ग्रन्थ शोध पत्रिका

## 13

सम्पादक

**प्रो० एस० रिनपोछे**
योजना निदेशक

**प्रो० व्रजवल्लभ द्विवेदी**
उपनिदेशक



**दुर्लभ बौद्ध ग्रन्थ शोध योजना**
**केन्द्रीय उच्च तिब्बती शिक्षा संस्थान**
**सारनाथ, वाराणसी**
**1992**

बुद्धाब्द २५३६ | बुद्ध पूर्णिमा | खीस्ताब्द १९९२

# धीः XIII

## विषयानुक्रमणी





या सा संसारचक्रं विरचयति मनःसन्नियोगात्महेतोः
सा धीर्यस्य प्रसादाद् दिशति निजभुवं स्वामिनो निष्प्रपञ्चम् ।
तच्च प्रत्यात्मवेद्यं समुदयति सुखं कल्पनाजालमुक्तं
कुर्यात् तस्याङ्घ्रियुग्मं शिरसि सविनयं सद्गुरोः सर्वकालम् ॥

—सरहपादस्य

# करुणास्तवः

[ 'करुणास्तव' और 'मञ्जुवज्रस्तोत्र' ये दोनों स्तोत्र स्व० प्रो० जगन्नाथ उपाध्याय जी के व्यक्तिगत संग्रह में प्राप्त हस्तलिखित कापी से लिये गये हैं। ]

स्तुत्वा प्रणम्यमभयङ्करसर्वसत्त्वं
सम्पूर्णचन्द्रवदनाम्बुजपत्रनेत्रम् ।
सर्वज्ञज्ञानमुकुटोज्ज्वलमुक्तिमार्गं
तं पद्मपाणिवरभूषितज्ञानराशिम् ॥१॥

उत्तुङ्गनाकवरपीनकपोलवक्त्रं
रक्ताधरं हिमतुषारसितासुदन्तम् ।
ब्रह्मेश्वरं श्रुतिधरं मधुरं च वाक्यं
तं पद्मपाणिमृदुवर्णस्वरं नमामि ॥२॥

मालाधरं कनकरत्नविभूषिताङ्गं
नेत्रत्रयं जटविभूषितबालचन्द्रम् ।
कृष्णाजिनाम्बरधरं च सुवर्णवर्णं
तं पद्मपाणिमृदुगात्रधरं नमामि ॥३॥

त्वां लोकनाथमवलोकितनामधेयं
यज्ञोपवीतसुद(शुभ)चञ्चलसर्पराजम् ।
चिन्तामणिप्रवरकुण्डलघृष्टगात्रं
तं पद्मपाणिस्तुतिसर्वकृतं नमामि ॥४॥

त्वं ज्ञानराशिवरभाषितसर्वसत्त्वः
संसारकम्पतिमिरार्णवमग्नसत्त्वान् ।
आलोकिते पदमनुत्तरबोधिमार्गं
तं पद्मपाणिवरमार्गददन्नमामि ॥५॥

गत्वा च येन नरकेषु–अवीचिमग्नं
शीतीकृतं हृदि विशालरुहं सपद्मम् ।
यो नारकी(कं) सकलदुःखमनाशयच्च
तं पद्मपाणिनरकाग्निशमं नमामि ॥६॥

संत्रासयन्ति यमपालकमग्नभूमि
हे धर्मराजमिव आगतकामरूपि
ये कर्मभूमिमिव ध्वंसित ते निमित्तं
तं पद्मपाणिहतशासनतं नमामि ॥७॥ (?)

गत्वा च येन वररूपमनोहराय
त्रैलोक्यनाथमभयङ्कर सर्वसत्त्वाः ।
दुःखार्णवे तव स्मराणि विमुक्ति दुःखं
तं पद्मपाणिहतकिल्बिषकं नमामि ॥८॥

त्वं प्रेतलोकगतये करुणावशेन
सूचीमुखानुदरपर्वतजीर्णमङ्गान् ।
क्षुत्तृष्णदुःखभयपीडितप्रेतसत्त्वान्
तं पद्मपाणितृषनाशकरं नमामि ॥९॥

अन्योन्यभक्षक्षुधपीडितप्रेतसत्त्वाः
संपीयते कररुहश्रवते नदीभिः ।
पुष्टि शरीरहतभुक्षतृषातुराणां
तं पद्मपाणिहतभुक्षतृषं नमामि ॥१०॥

गत्वा तमं भुवनवर्जितचन्द्रसूर्ये
चिन्तामणिज्वलितरत्नप्रभावभासे ।
तं यक्षराक्षसगणैश्चरणे नमस्ते
तं पद्मपाणितमभङ्गकृतं नमामि ॥११॥

गत्वा च येन बलिभग्नमनोरथस्य
यद्दीयतेऽनुत्तरपिण्डपात्रम् ।
धर्मकथेन परितर्पितदानवेन्द्रं
तं पद्मपाणिवरधर्मददं नमामि ॥१२॥

गत्वा च येन दिवि कुण्डलदेवपुत्रं
दानस्य हीनक्षुधपीडितदुःखितं च ।
तं याचयामि परिपूर्णसमृद्धिरत्नं
तं पद्मपाणिधनवृद्धिकरं नमामि ॥१३॥

त्वं कामरूपमुपदर्शितराक्षसीभिः
कामावशेन चरितं तव राक्षसीभिः ।
घातस्य चित्तपरिवर्जितधर्मचित्तं
तं पद्मपाणिबहुरूपधरं नमामि ॥१४॥

विण्मूत्रभूमिकृमिकोटिसमुद्भवन्ति
गत्वा च येन अलिरूपमनुस्मरन्ति ।
निःसारितं घुणघुणाय ददन्ति धर्मं
तं पद्मपाणिमलिरूपधरं नमामि ॥१५॥

दुर्भिक्षमागधविशालभवेषु पुष्टिं
क्षुत्तृष्णदुःखभयपीडितसर्वसत्त्वाः ।
धान्यादिवृष्टिबहुव्रीहिसमृद्धिरत्नं
तं पद्मपाणिवरकारुणिकं नमामि ॥१६॥

वाराह-अश्वकृतरूपमहाजवेन
उद्धृत्य येन वणिजो भयराक्षसीभिः ।
आस्तीर्य तं पवनवेगमहासमुद्रं
तं पद्मपाणिजितमृत्युभयं नमामि ॥१७॥

त्रैधातुकं तव भजामि विमुक्तिदुःखं
नानासमाधिपरिपूर्णविचित्रमग्नम् ।
त्वद्रोमकूपनिवसन्ति अनेकसत्त्वाः
तं पद्मपाणिक्षयनाशकरं नमामि ॥१८॥

नानाभयानि तव नाममनुस्मरन्ति
राजस्य दण्डभयराक्षसचौरभूतैः ।
नद्यादिमार्गहतकन्दर चाग्निदग्धं
तं पद्मपाणिमभयं ददतं नमामि ॥१९॥

व्याघ्रीभयं खगपिशाचसडाकिनीना-
मापत्सु व्याधिबहुकुष्ठवियोगदुःखम् ।
वैराग्यक्लेशबहु-आपद नाशयन्ति
तं पद्मपाणिभयनाशकरं नमामि ॥२०॥

शुक्लाष्टमीनियमधर्ममभोघपाशं
तस्मै कृतं विजितमिन्द्रियब्रह्मचर्यम् ।
सर्वं(र्वं)प्रणम्य निजगेदमशेषपापं
तं पद्मपाणिवरदं सततं नमामि ॥२१॥

नित्यं वसन् गुणसमृद्धितपोबलेषु
नानाद्रुमैः तिलकचम्पकपारिजातैः ।
रम्यं तडागद्विजश्वापदसेवितं च
तं पद्मपाणिनिरयेषु सदा नमामि ॥२२॥

देवैः कुबेरवरुणैर्यमवन्दितश्च
गन्धर्वयक्षमुनिदानववन्दितश्च ।
रक्षेषुनागमनुजैश्च नमस्कृतेषु
भूतैः पिशाचगरुडैश्च नमस्कृतेषु ॥२३॥

ये ये पठन्ति करुणास्तव नित्यकालं
शान्ति च पुष्टिधनवृद्धिषु लब्धकामाः ।
आयुर्विभूतिवरसौख्यविशालभागी
त्रैकालप्राप्तमपि पश्यति लोकनाथम् ॥२४॥

संकीर्तयन्ति तव वीर्यमहानुभावं
रात्रौ दिवा च तव नाममनुस्मरन्ति ।
दुःस्वप्नविघ्नभयपापविनाशयन्ति
तुष्यन्तु देव सततं तव रक्षयन्ति ॥२५॥

इति श्रीमदार्यावलोकितेश्वरभट्टारकस्य श्रीबन्धुदत्ताचार्यकृतः
करुणास्तवः समाप्तः ॥

# मञ्जुवज्रस्तोत्रम्

शशधरमिव शुभ्रं खड्गपुस्ताकपाणिं
सुरुचिरमतिशान्तं पञ्चचीरं कुमारम् ।
पृथुतरवरमोक्षं पद्मपत्रायताक्षं
कुमतिदहनदक्षं मञ्जुघोषं नमामि ॥१॥

कृतमृगरिपुयानं दत्तभक्तप्रदानं
सुरदनुजनृयानं बोधिसत्त्वप्रधानम् ।
अखिलगुणनिधानं सर्वविद्यावितानं
करसरसिजबाणं मञ्जुघोषं नमामि ॥२॥

विभृतसकलकोषं क्षालिताज्ञानदोषं
स्मरणभजनतोषं दूररागादिदोषम् ।
विहितससुरपोषं सिद्धिदाख्यानयोषं
कृतजडपरिशोषं मञ्जुघोषं नमामि ॥३॥

गणपतिशरजन्मश्रीमहाकालसिंह-
परिवृतमिव चन्द्राभाभमिन्दीवराक्षम् ।
असि-शर-जपमाला-पुस्तकं संवहन्तम्
उरसि ललितमालं मञ्जुघोषं नमामि ॥४॥

सुरपतिशमनायाप्येष मित्राग्निरक्षः-
पवनप्रमथपालैः संवृतं स्मेरवक्त्रम् ।
खगपतिरथगात्रं ब्रह्मवन्द्यं रमोमा-
विहितचरणभक्तं मञ्जुघोषं नमामि ॥५॥

यदसिकठिनधाराच्छेदमार्गाभिवाहा(हः)
सकलसलिलधारापातिताङ्गाङ्गमन्त्रः ।
बहुपरिचयस्थल्यां भूमिनद्यापि रेजे
बहुतरमहिमानं मञ्जुघोषं नमामि ॥६॥

भवदभिनवनुत्या तोषिता गुह्यदेवी
निखिलनिगमसारा सुप्रकाशाऽतिरेजे ।

भवजलनिधिपारं दानकल्पद्रुमाग्रं
गलितबहुमहोग्रं मञ्जुघोषं नमामि ॥७॥

विभजति जनलोको धर्मधातुं महेशं
दशशतदलपद्मे संस्थितं ज्योतिरैशम् ।
तदपि तव प्रशस्तं देवमाहात्म्यमीशं
विभजति भुजगेशं मञ्जुघोषं नमामि ॥८॥

पठति यदिदमिष्टं मालिनीपद्यबन्धं
स भवति कविराजो वादिसिंहासनस्थः ।
सकलकविसभासु प्रोज्ज्वलद्वाक्सुधारः
कलितसकलविद्यो भूषणो भव्यदक्षः ॥९॥

इति स्वयम्भूपुराणोद्धृतं मञ्जुगर्भविरचितं
मञ्जुवज्रस्तोत्रं समाप्तम् ॥

# दुर्लभ ग्रन्थ परिचय

—जनार्दन पाण्डेय—

[ प्रस्तुत अङ्क में निम्नलिखित दुर्लभ ग्रन्थों का परिचय दिया जा रहा है—

1. हेरुकाभिधानतन्त्र ( श्रीचक्रसंवरतन्त्र )
2. नैरात्म्यातन्त्र
3. प्रतिमालक्षण
4. आत्रेयतिलक
5. आदियोगनाम समाधि
6 मानसीचक्र
7. गुरुपंचाशिका (महाचार्य अश्वघोषकृत)]

## 1. हेरुकाभिधानतन्त्र ( श्रीचक्रसंवरतन्त्र )

**ग्रन्थ**—हेरुकाभिधान ( श्रीचक्रसंवर ) तन्त्र
**संख्या**—13285
**पत्र संख्या—1-26, पंक्ति प्र० प०-10, अक्षर प्र० पं०-42**
**लिपि**—देवनागरी, **अपूर्ण** ।

**प्रारम्भ**

नमः श्रीचक्रसंवराय ।
अथातो रहस्यं वक्ष्ये समासान्न तु विस्तरात् ।
श्रीहेरुकसंयोगं सर्वकामार्थसाधकम् ॥
उत्तरादपि चोत्तरं डाकिनीजालसंवरम् ।
रहस्ये परमे रम्ये सर्वात्मनि सदा स्थितः ॥
सर्वडाकिनीमयः सत्त्वो वज्रसत्त्वः परं सुखः ।
असौ हि स्वयंभूर्भगवान् वीरो डाकिनीजालसंवरः ॥
संभवान्नादरूपान् विनिष्क्रान्ताः समयाचारगोचराः ।
दुर्लभं त्रिषु लोकेषु आदिमध्यान्तसंस्थितम् ॥

अन्त

उत्पादमपि बुद्धानामनुत्पादेऽपि वा स्थितः।
धर्मता सर्वचिन्त्या हानिवृद्धिविवर्जिता ॥
इत्येवं तुलयित्वा तु न निन्द्यात् सर्वलौकिकम्।
अचिन्त्यो गतिस्तवायमचिन्त्यो बुद्धनाटकम् ॥
सूत्रं क्रियाभिचर्याणां योगगुह्यं तु भेदतः।
सत्त्वावतारणशीलस्तु तत्र············नता इव ॥

पुष्पिका

इति श्रीहेरुकाभिधाने महामन्त्रराजलक्षान्तःपाति चोत्तरोत्तरं राजा सर्वमन्त्राणां श्रीहेरुकमहावीरपठितसिद्धसर्वज्ञपराजितः आदिसिद्धि चोत्तरतन्त्रं समाप्तम्।

विवरण

इस ग्रन्थ की जीराक्स प्रति गायकवाड़ ओरियण्टल इंस्टीट्यूट बड़ौदा से उपलब्ध हुई है, जिसके आधार पर यह विवरण दिया जा रहा है। यह प्राचीन ताड़पत्र से नेवारी लिपि से देवनागरी में प्रतिलिपि कराकर लिखाया गया है, जिसमें पत्र सं० 13 के बाद 1, 15 के बाद 5, तथा 20 के बाद 4 पत्र नहीं हैं। बीच-बीच में भी प्रतिलिपिकार जहाँ पढ़ नहीं पाया, वहाँ·········चिह्न देकर छोड़ दिया है।

विशेष

'धीः' पत्रिका के अंक 12, पृष्ठ 17 पर श्रीचक्रसंवरविवृति तथा उसी अंक में पृष्ठ 19 पर चक्रविवरणपञ्जिका नामक दो टीकाओं का विवरण देते हुए हमने लिखा था कि 'जिस मूलग्रन्थ श्रीचक्रसंवर की ये टीकाएँ हैं, उसकी मूलमातृका हमें अभी तक उपलब्ध नहीं हो सकी।' हमें 'धीः' के पाठकों को यह सूचना देते हुए अत्यन्त हर्ष हो रहा है कि उपर्युक्त व्याख्याओं की पुष्पिकाओं और प्रतीकों को मिलाने पर निश्चय हो गया है कि उक्त हेरुकाभिधान तन्त्र ही श्रीचक्रसंवर तन्त्र है, क्योंकि इसकी विषयवस्तु, मूल के प्रतीक और 51 पटलों की पुष्पिकाएँ ठीक क्रम से मिल जाती हैं।

इसके साथ ही यह भी ज्ञातव्य है कि 'धीः' के अंक 11, पृष्ठ 4–7 में हमने जो आचार्य वज्रपाणि कृत लघुतन्त्रटीका नामक ग्रन्थ का विवरण दिया है, वह भी श्रीचक्रसंवर की ही व्याख्या है। इसमें भी मूलग्रन्थ के प्रतीक अविकल रूप से

मिल रहे हैं। यद्यपि श्री वज्रपाणि ने इसकी विस्तृत व्याख्या की है और हमें जो मातृका उपलब्ध हुई है, उसकी अन्तिम पुष्पिका में 'इति पिण्डार्थविवरणं नाम प्रथमष्टीकापरिच्छेद:' लिखा है इससे ज्ञात होता है कि यह मातृका केवल मात्र प्रथम प्रकरण की टीका है।

साथ ही इस लघुतन्त्र को लक्षाभिधान ग्रन्थ से उद्धृत 700 श्लोकात्मक कहा गया है और प्रस्तुत चक्रसंवरतन्त्र में भी प्रायः 700 ही श्लोक हैं।

दुर्लभ बौद्ध ग्रन्थ शोधयोजना में यह ग्रन्थ टीकाओं सहित सम्पादन के लिये चुना गया था, किन्तु मूल मातृका के उपलब्ध न होने से अब तक इसका सम्पादन न हो सका, अब हमारे पास मूल चक्रसंवर तंत्र, विवृति, पञ्जिका तथा लघुतंत्रटीका नाम से चार ग्रन्थ हैं, अतः हम विश्वास पूर्वक कह सकते हैं कि इन टीकाओं तथा तिब्बती अनुवाद के आधार पर इसके अपूर्ण स्थलों को पूर्ण करके हम शीघ्र ही इस सटीक ग्रन्थ को पाठकों तक पहुँचाने का प्रयास करेंगे।

### विषय-विवेचन

इस ग्रन्थ में प्रतिपादित विषयों की सूची अवान्तर पुष्पिकाओं के आधार पर 'धीः' अंक 12, पृष्ठ 18 पर विवृति के विवरण में दे दी गई है।

## 2. नैरात्म्यातन्त्र

**ग्रन्थ**—नैरात्म्यातन्त्र
**संख्या**—4.2211, रील नं० A 967.4, 968/4
**पत्रसंख्या**—1-106, **पंक्ति प्र० प०**—10, **अक्षर प्र० पं०**—39
**लिपि**—नेवारी, **पूर्ण**।

### प्रारम्भ

ॐनमः श्रीनैरात्म्यायै

डोम्बीहेरुकपादौ देवीतन्त्रस्य भावना।
कथिता सपिण्डसकलं हेवज्रा योगिनी संजाता॥
नभसि भट्टारकं दृष्ट्वा गुरुकुलिशो रक्तं(?) प्रभुम्।
पूजयेद् वन्दयेद् धीमानक्षोभ्यप्रतिरूपकम्॥
स्वबीजाद्यं ध्यात्वा पूजयेन्मन्त्रं प्रकल्पयेत्।
अष्टभिर्मातृभिर्नृत्य(र्नित्यं) पञ्चामृतप्रयोगतः॥

2

गौर्याद्याः पञ्चयोगिन्यः पञ्चामृतधरा मताः ।
शबरी चाण्डाली डोम्बी रस........लिंगणैर्युताः ॥

सन्तुष्टामिन्द्रियैर्येषु तेनाहं नामपूर्वकम् ।
तदा समाधिमात्रं तु कथितं मुनिपुङ्गवैः ॥

समाधिर्गम्यते ज्ञानं बुद्धानां दिव्यमिन्द्रियम् ।
कृतं नैरात्म्ययोगिन्यै संभवा तेषु योगिनी ॥

**अन्त**

श्मशानवासिमा..........गतः नमस्कृताय एपा पिष्ठिमाकलाद्यं यदि त्वं प्रतिज्ञां स्मरसि तदा इमं रत्नत्रयोपलिंगममुकनामकं दुष्टं खर२ खाहि२ मार२ गृह्ण२ खंख२ दह२ पच२ दिनैकेन हुँ फट् २ स्वाहा । सर्वमङ्गाराङ्गसंभूतप्रेतपिशाचान्माण्डलेय-वलिं गृह्णन्तु मम सिद्धिं कुरु२ अङ्गीकुरु । बलिमन्त्रः—ॐमहाकालाय हुं फट् । इदमवोचद् भगवान् श्रीयोगिनीसगणः सदेवमानुषासुरगन्धर्वकिन्नराश्च लोका भगवतो भाषितमभ्यनन्दन्निति ।

**पुष्पिका**

श्रीनैरात्म्यातन्त्रः समाप्तः ।

**विवरण**

इस ग्रन्थ की माइक्रोफिल्म राष्ट्रीय अभिलेखालय काठमांडू नेपाल से शान्तरक्षित ग्रन्थालय में आई है, जिसके आधार पर यह विवरण दिया जा रहा है ।

**विषय-विवेचन**

इस ग्रन्थ में पटलों को समाधि नाम दिया गया है और इस प्रकार यहाँ १७ समाधियाँ हैं, जिनकी अवान्तर पुष्पिकाओं से ग्रन्थ का प्रतिपाद्य विषय स्पष्ट हो जाता है । अवान्तर पुष्पिकाएँ इस प्रकार हैं—

प्रथमादियोगो नाम प्रथमः समाधिः
देव्या मण्डलराजाग्री नाम द्वितीयः समाधिः
देव्याः कर्मराजाग्री नाम तृतीयः समाधिः
महामायासाधनं नाम चतुर्थः समाधिः
हेरुकादिनैरात्म्यासमाधिमुद्रा नाम पञ्चमः समाधिः
द्विभुजसंवरसाधनविशुद्धिसमाधिः षष्ठः

डाकसंवरवलिपूजाविधि समाधिःसप्तमः
संवरस्य सप्ताक्षरसाधनसमाधिरष्टमः
हेरुकसमाधि-हस्तपूजासमाधिर्नवमः
वज्रहुङ्कारसाधनसमाधिर्दशमः
सप्तशतीकल्पान्त-हयग्रीवसाधनसमाधिरेकादशः
भूतडामरसाधनसमाधिरेकादशः ( द्वादशः )
योगिनीतन्त्रे त्रैलोक्यवज्रचित्तसाधनसमाधिर्द्वादिशः ( त्रयोदशः )
कर्मप्रसरयमारिसाधनसमाधिस्त्रयोदशः ( चतुर्दशः )
योगिनीमन्त्र-स्वाधिष्ठान-रक्तयमारिसाधनसमाधिश्चतुर्दशः ( पञ्चदशः )
मङ्गलयमारि-साधनसमाधिः पञ्चदशः ( षोडशः )
विघ्नान्तकसाधनसमाधिः षोडशः ( सप्तदशः )
वज्रमहाकालसाधनसमाधिः सप्तदशः ( अष्टादशः )

यहाँ एकादश संख्या दो बार लिखी गई है।

### 3. प्रतिमालक्षणम्

**ग्रन्थ**—प्रतिमालक्षण
**संख्या**—3-259, रील नं० A 940/10
**पत्रसंख्या—1-5, पंक्ति प्र० प०-12, अक्षर प्र० पं०-44**
**लिपि**—नेवारी, **पूर्ण**।

**प्रारम्भ**

ॐ नमो बुद्धाय। बुद्धो भगवान् जेतवने विहरति स्म, भूषितवरभवनाद् मातुर्द्वाराद् गतावगतकालसमयः शारिपुत्रो भगवन्तमेतदवोचत्—भगवन्! भगवता गते परिनिर्वृते वा श्राद्धैः कुलपुत्रैः कथं प्रतिपत्तव्यम्? भगवानाह—शारिपुत्र! मयि गते परिनिर्वृते वा न्यग्रोधपरिमण्डलकार्यं कर्तव्यम्। यावत् कार्यं तावद् ध्यानम्, यावद् ध्यानं तावत्कार्यम्, पूजासत्कारार्थं प्रतिमा कर्तव्या, सर्वात्मायामवस्थौल्य–लावण्य–लालित्यसुललितत्वम्, तत्राकारः शिरः स्कन्धांसस्थितोष्णीषत्वादि सुसंस्थानात्, तत्रायामविस्तराच्छेदसन्धिबन्धनिर्गमे प्रमाणं बोधिसत्त्वानां सुगतानां च प्रवक्ष्यामि, तच्छृणु—

**अन्त**

तयोस्तलं सुवक्त्रादि चित्राकारं तु कारयेत्।
पादाद्भुतं प्रशंसन्ति सर्वज्ञा हतकिल्विषाः ॥

कुक्कुटाण्डं तिलाकारं चतुरस्रं सुवर्तुलम् ।
सर्वसामान्यलिङ्गानां मुखमेतच्चतुर्विधम् ॥

महानरसुरस्त्रीणां कुक्कुटाण्डतिलाकृति ।
लावण्यं दर्शनीयं तत् कारयेत मुखद्वयम् ॥

प्रेतभूतपिशाचानां रक्षसां विकृताकृति ।
मण्डलं चतुरस्रं च कारयेत्तु मुखद्वयम् ॥

समा दृष्टिः प्रसन्ना च बुद्धानामवलोकने ।
नाधो नोर्ध्वं न दैन्येन संयुक्तं सर्वदर्शिनाम् ॥

**पुष्पिका**

इति सम्यक्संबुद्धभाषितं प्रतिमालक्षणं समाप्तम् ॥

**विवरण**

इस ग्रंथ की माइक्रोफिल्म राष्ट्रीय अभिलेखालय काठमांडू नेपाल से शान्तरक्षित ग्रंथालय में आई है, जिसके आधार पर यह विवरण दिया जा रहा है।

**विषय-विवेचन**

जैसा कि ग्रन्थ के नाम से ही विदित होता है, इसमें भगवान् बुद्ध की प्रतिमा के निर्माण की विधि, अंगों के परिमाण आदि दिये गये हैं।

## 4. आत्रेयतिलकम्

**ग्रन्थ**—आत्रेयतिलक
**संख्या**—3-259, रील नं० A 940/10
**पत्रसंख्या**—12 ( 5-16 ), **पंक्ति प्र० प०**–12, **अक्षर प्र० पं०**–44
**लिपि**—नेवारी, **पूर्ण**।

**प्रारम्भ**

नमो बुद्धाय।
आत्रेयतिलके बौद्धशास्त्रेऽन्यत्र पुरातनैः ।
उक्तं यत्पूर्वमुनिभिः प्रतिमा····लक्षणम् ॥
तत्सत्कृत्येह चैकत्र पिण्डीकृत्य यथाक्रमम् ।
नत्वा सर्वविदं देवमर्चालक्षणमुच्यते ॥

द्वादशाङ्गुलि तालं च वितस्तिर्मुखमेव च ।
ज्ञेयमेवार्थनामैतत् द्व्यङ्गुलं गोलकं कला ॥
पल्लवानां चतुर्भागो नायताङ्गुलिका स्मृता ।
ततोऽङ्गुल्यष्टभागेन पर्व विन्द्याद्विचक्षणः ॥

**अन्त**

सप्ततालस्यैकत्वेनाङ्गुलि 83, शिरोऽङ्गुलि 3, मुखाङ्गुलि 12, ग्रीवाङ्गुलि 3, देहाङ्गुलि 19, नितम्बाङ्गुलि 1, कट्यङ्गुलि 2, ऊर्वङ्गुलि 19, जान्वङ्गुलि 3, पिण्ड्यङ्गुलि 19, गुल्फाङ्गुलि 1, अधोभागाङ्गुलि 2, हिक्काश्रोत्राङ्गुलि 5, बाह्वङ्गुलि 12, प्रबाह्वङ्गुलि 13, करपल्लवाङ्गुलि 10, एकत्वेन यवसंख्या 572 ।

चतुस्तालस्यैकत्वेनाङ्गुलि 38, शिरोऽङ्गुलि 1, मुखाङ्गुलि 12, ग्रीवाङ्गुलि 1, देहाङ्गुलि 12, नितम्ब × कट्यङ्गुलि 1, ऊरू 8, जानु 1, पिण्डीगुल्फ × पार्ष्णि 1, हिक्काश्रोत्र 8, बाहू 5, प्रबाहू 8, करपल्लव 7, एकत्वेन यवसंख्या 588 ।

अथ पञ्च विषु चाप समास्ते च वह्निवेदगुणास्तथा ।
न्यूनाधिकं यथा कुर्याद् यवरा समुदावहा (?) ॥

**पुष्पिका**

नहीं है ।

बीच में अवान्तर पुष्पिकाएँ इस प्रकार हैं—

आत्रेयतिलके देवीलक्षण-अष्टतालसमाप्तः । ( पत्र 11 )
,, ,, षष्ठताललक्षणसमाप्तः । ,, 12
,, ,, दशताललक्षणसमाप्तः । ,, 12
,, ,, सप्तताललक्षणसमाप्तः । ,, 13
,, ,, चतुस्ताललक्षणसमाप्तः । ,, 13
,, ,, जीर्णोद्धारः समाप्तः । ,, 15

**विवरण**

यह ग्रन्थ पूर्वोक्त 'प्रतिमालक्षण' के साथ ही लिखा गया है । दोनों का प्रतिपाद्य-विषय भी एक ही है, किन्तु ग्रन्थ भिन्न हैं, जो वास्तु एवं शिल्पशास्त्र के

अध्येताओं के लिये महत्त्वपूर्ण हैं। प्रतिमा ( मूर्ति ) विषय से सम्बद्ध होने से सभी के लिये उपयोगी हैं।

**5. आदियोग नाम समाधिः**

**ग्रन्थ**—आदियोगनाम समाधि
**संख्या**—इ. 1243.5
**पत्रसंख्या—ठ्यासफू,**
**लिपि**—नेवारी, **पूर्ण**, (?)

**प्रारम्भ**

ॐ नमः श्रीहेवज्राय। ॐ आः हूँ श्रीमत्सतगुरुजनचरणकमलाय सम्यग्ज्ञानावभासकाय नमः ॥ हूँ ॥

लोकानां न विर्वजितं जिनमयं नित्योदितं व्यापिनं
निर्द्वन्द्वं विमलं निरिन्द्रियसुखं सर्वज्ञमेवापरम्।
शान्तं चित्तमचित्तचित्तमजत्रं(रं) सर्वेन्द्रियं सर्वतो
बुद्धानां प्रणमामि कायममृतं स्वाभाविकं बोधये ॥

श्मशानादिमनोनुकूलस्थाने पूर्वाभिमुखो विश्ववज्राङ्कितसुखासनोपविष्टो नग्नमुक्तकेशः पापविरहितः पञ्चामृतं मुखे प्रक्षिप्य दक्षिणहस्ते आकारेण सूर्यमण्डलं वामहस्ते अ............।............मुच्चारय हूँ फट्। मण्डलेश पञ्चोपचार पूजा। ओं वल्यधिष्ठान। वलिसमधिष्ठान। मण्डलसमधिष्ठान। करुणामयता। शून्यता भावयेत्।

**अन्त**

पापदेशनादिमितिसंसारेषु ससंकल्पं मया पापकर्म कृतं कारितमनुमोदितं यत् किञ्चित्सर्वं पुनः करणं प्रतिशपामि। जपयूपगणदेवता। श्रावकप्रत्येकसम्यक्बोधिसत्त्वानां कुशलमनुमोदे। सर्वं चानुत्तरायां सम्यक्बोधौ परिणामयामि।

**पुष्पिका**

इत्यादियोगनाम समाधिः

---

1. यहाँ से आगे पत्र फट गया है, जिसे पुनः जोड़ा गया है, जिससे दो पंक्तियों का पाठ अस्पष्ट और अपठनीय हो गया है।

**विवरण**

इस ग्रन्थ की माइक्रोफिल्म राष्ट्रीय अभिलेखालय काठमांडू से शान्तरक्षित ग्रन्थालय में प्राप्त हुई है, जिसके आधार पर यह विवरण दिया जा रहा है। यहाँ यह ज्ञातव्य है कि ग्रन्थ के प्रारम्भ में हासिये पर 'हेवज्रसमाधिः' लिखा हुआ है। वैसे यह संग्रहग्रन्थ प्रतीत होता है। इसमें 1. आदियोगनाम समाधि, 2. मण्डलराजाग्राग्री नाम समाधि, 3. सूक्ष्मयोगस्तृतीयः समाधिः, ४. मन्त्रजापयोग-समाधि 5. बालतत्त्वसमाधि, 6. हेवज्रमुखाख्यान देगुरि, ७. चण्डमहारोषण-साधन, ये छ ग्रन्थ हैं। प्रायः आधा ग्रन्थ तो ठीक है, किन्तु आगे लगता है व्यासफू के पत्र टूट जाने से उनकी फोटो लेने में क्रम गड़बड़ा गया है क्योंकि कहीं-कहीं प्रसंगवाक्य मिलते नहीं। चण्डमहारोषण साधन वही है, जो साधनमाला भाग 1, पृ० 173 में प्रकाशित है। जितना अंश उपलब्ध है, वह संग्रहणीय है।

**6. मानसीचक्र**

**ग्रन्थ**—मानसीचक्र
**संख्या**—MBB—II—7
**पत्रसंख्या**—1—19, **पंक्ति प्र० प०** —10, **अक्षर प्र० पं०**—31
**लिपि**—नेवारी, **पूर्ण**।

**प्रारम्भ**

ॐ नमः श्रीकुलिशेश्वराय। ॐ नमः श्री आदिबुद्धवज्रडाकाय श्रीहेरुकाय, संसार-चक्रनाथसकलसत्त्वहितार्थोऽहं नमामि।

वन्दे श्रीवज्रहस्तं मुनिवरकथितम् आदिबुद्धं जिनश्रीः
संसारे मोक्षदाता सकलगुणनिधिः कामक्रोधादिनाशः।
नाथस्त्वं घण्टहस्तः सकलजिनगुरो सिद्धिदाता त्वमेव
वा····श्रीसंवरो वो मम हृदयवसत् पातु श्रीसंवरो वः॥

आदौ श्रीसंवरो बुद्धबोधिसत्त्वधर्मसंघेभ्य एतत्स्वरूपीति उ आः हूंकार वज्रसिद्धि उ आः हाकार घण्टसिद्धि हूंकारवाह्यवज्ररूपि होकार बाह्यघण्टरूपि तत् प्रज्ञापारमिता तदादौ वज्रघण्ट आदौ सम्पद् उभयतः प्रज्ञापारमिता तव पुष्पान्तस्थितः—

**अन्त**

एतत्पुण्यप्रभावेण इति अन्तर्भावेन अनुभावेन शक्तिवान् भूत्वा इहजम् अतिपुष्प-संपाते मंत्र तंत्र जप जोग ध्यान शीघ्रं ददतु अन्ते परजन्मनि सुखावतीमोक्षमार्ग-दर्शनाय त्वया सह अहं स्थापयामि इति मोक्षशास्त्रं धारयिष्ये। अन्ते याचयिष्ये अन्ते जनानामभियाचनाय इति क्षमस्व गुरो।

**पुष्पिका**

श्रीनित्याचार मानसीभाव श्रीमान् कुलिशेश्वरभावनायां गुह्यः समाप्तः।

**विवरण**

इस ग्रन्थ की माइक्रोफिश प्रति इंडियन एडवांस स्टडीज आफ वर्ल्ड रिलीजन न्यूयार्क से शान्तरक्षित ग्रन्थालय में प्राप्त हुई है, जिसके आधार पर यह विवरण दिया जा रहा है।

**विषय विवेचन**

इसमें १६ प्रकरण हैं और प्रत्येक में एक-एक मानसोचक्र की भावना की गई है। प्रत्येक प्रकरण की अवान्तर पुष्पिका में—

इति श्रीपापमोचना-अनुमोदनाया प्रथममानसीचक्रं समाप्तम्
,, ,, ,, द्वितीय ,, ,,
,, ,, ,, तृतीय ,, ,,
इसी प्रकार अन्त में— षोडश ,, ,,
दिया है।

**7. गुरुपञ्चाशिका**

## गुरुपञ्चाशिका

महाचार्य अश्वघोषकृता

ॐ नमो बुद्धाय।

श्रीवज्रसत्त्वपदवीप्रतिलम्भहेतो-
र्नत्वा यथाविधि गुरोश्चरणारविन्दम्।
तत्पर्युपास्तिरमला बहुतन्त्रगीता
संक्षिप्य कथ्यत इयं शृणुतादरेण ॥ 1 ॥

अभिषेकाग्रलब्धो हि वज्राचार्यस्तथागतैः।
दशदिग्लोकधातुस्थैस्त्रिकालमेत्य वन्द्यते ॥ 2 ॥

त्रिकालं परया भक्त्या सपुष्पाञ्जलिमण्डलैः।
पर्युपास्यो गुरुः शास्ता शिरसा पादवन्दनात् ॥ 3 ॥

सद्धर्मादीन् पुरस्कृत्य गृही वा नवकोऽपि वा।
वन्द्यो व्रतधरैर्बुद्ध्या लोकावद्यावहानये ॥ 4 ॥

सुखासनं समुत्थानमर्थक्रियादिगौरवम्।
सर्वमेव व्रती कुर्यात् त्यक्त्वा चार्चनवन्दनम् ॥ 5 ॥

प्राक् शिष्याचार्यसंबन्धः कार्यः परीक्ष्य सूरिभिः।
समानसमयभ्रंशो दोषो हि गुरुशिष्ययोः ॥ 6 ॥

निष्कृपं क्रोधनं क्रूरं स्तब्धं लुब्धमसंयतम्।
स्वोत्कर्षकं च नो कुर्याद् गुरुं शिष्यं च बुद्धिमान् ॥ 7 ॥

धीरो विनीतो मतिमान् क्षमावानार्जवोऽशठः।
मन्त्रतन्त्रप्रयोगज्ञः कृपालुः शास्त्रकोविदः ॥ 8 ॥

दशतत्त्वपरिज्ञाता मण्डलालेख्यकर्मवित्।
मन्त्रव्याख्याकृदाचार्यः प्रसन्नः स्याज्जितेन्द्रियः ॥ 9 ॥

तं नाथं योऽवमन्येत शिष्यो भूत्वा सचेतनः।
सर्वबुद्धापमानेन स नित्यं दुःखमाप्नुयात् ॥ 10 ॥

ईत्युपद्रवचौरैश्च ग्रहज्वरविषादिभिः।
म्रियतेऽसौ महामूढो गुरुपादाभिनिन्दकः ॥ 11 ॥

राजवातानलव्यालैर्डाकिनीजलतस्करैः।
विघ्नैर्विनायकैश्चापि मारितो नरकं व्रजेत् ॥ 12 ॥

न कुर्याच्चित्तसंक्षोभमाचार्यस्य कदाचन।
यदा करोति दुष्प्रज्ञो नरके पच्यते ध्रुवम् ॥ 13 ॥

नरका ये समाख्याता अवीच्याद्या भयानकाः।
तत्र वासः समाख्यात आचार्यस्य हि निन्दनात् ॥ 14 ॥

तस्मात् सर्वप्रयत्नेन वज्राचार्यं महागुरुम्।
प्रच्छन्नवरकल्याणं नावमन्येत् कदाचन ॥ 15 ॥

यथेष्टदक्षिणादानाद् गुरुभक्तं सगौरवम् ।
उक्ता ज्वरादयस्तापा न भूयः प्रभवन्ति हि ॥ 16 ॥

अदेयैः पुत्रदाराद्यैरसुभिर्वा निजैरपि ।
सेव्यः स्वसंवराचार्यः किं पुनर्विभवैश्चलैः ॥ 17 ॥

यतः सुदुर्लभं वस्तु कल्पासंख्येयकोटिभिः ।
बुद्धत्वमुद्योगवते ददातीहैव जन्मनि ॥ 18 ॥

नित्यं स्वसमयः साध्यो नित्यं पूज्यास्तथागताः ।
नित्यं च गुरवे देयं सर्वबुद्धसमो ह्यसौ ॥ 19 ॥

यद्यदिष्टतरं लोके विशिष्टतरमेव वा ।
तत्तद्धि गुरवे देयं सदैवाक्षयमिच्छता ॥ 20 ॥

दत्तेऽस्मै सर्वबुद्धेभ्यो दत्तं भवति शाश्वतम् ।
तस्माच्च पुण्यसंभारः संभाराद् बोधिरुत्तमा ॥ 21 ॥

ते शिष्याः करुणोत्सर्गशीलक्षान्तिगुणान्विताः ।
ये नान्यत्वं कल्पयन्ति गुरोर्वज्रधरस्य च ॥ 22 ॥

चैत्यभङ्गादिभीत्याऽपि गुरोश्छायां न लङ्घयेत् ।
पादुकाऽऽसनयानादेर्लङ्घनस्य तु का कथा ॥ 23 ॥

श्रूयाद् यत्नाद् गुरोराज्ञां हृष्टचित्तो महामतिः ।
अशक्तः श्रावयेत् तस्मा उपपत्त्या त्वशक्तिताम् ॥ 24 ॥

गुरोः सिद्धिं समाप्नोति गुरोः स्वर्गः गुरोः सुखम् ।
तस्मात् सर्वप्रयत्नेन गुरोराज्ञां न लङ्घयेत् ॥ 25 ॥

स्वात्मवच्च गुरोर्द्रव्यं गुरुवच्च तदङ्गनाम् ।
स्वजनानिव तल्लोकान् पश्येन्नित्यं समाहितः ॥ 26 ॥

शय्यारोहमग्रयानमुष्णीषाद्युपबन्धनम् ।
न कुर्यादासने पादं कटिहस्तं च सन्निधौ ॥ 27 ॥

सुप्तेन वा निषण्णेन न स्थेयमुत्थिते गुरौ ।
दक्षश्चोत्साहसम्पन्नस्तत्कार्येषु सदा भवेत् ॥ 28 ॥

श्लेष्मादीनां परित्यागः पादप्रसारणं तथा ।
चङ्क्रमणं विवादं च न कुर्यात् पुरतो गुरोः ॥ 29 ॥

संवाहनं नर्तनं च न गानं न च वादनम् ।
बहु संलपनं चापि न कुर्यात् पुरतो गुरोः ॥ 30 ॥
नत्वाऽऽसनात् समुत्थेयं निषत्तव्यं च भक्तितः ।
निश्यप्सु सभये मार्गे प्राथ्यग्रि गमनं चरेत् ॥ 31 ॥
नाङ्गानि चालयेद् धीमान् न जृम्भादि समाश्रयेत् ।
नाङ्गुलिस्फोटनं कुर्यात् पुरः पश्यति शास्तरि ॥ 32 ॥
पादयोः क्षालनं चाङ्गप्रोञ्छाभ्यञ्जनमर्दनम् ।
पूर्वं प्रणम्य कर्तव्यं ततः कुर्याद् यदादिशेत् ॥ 33 ॥
[ आह्वानादौ गुरोर्नाम्नि पूज्यपादादि योजयेत् ।
अन्यदा श्रद्धया ब्रूयात् सादरैस्तु विशेषणैः ॥ 34 ॥
आदिश्यताम्, करिष्यामि, प्रवदेत् साञ्जलिर्गुरुम् ।
श्रुत्वाऽऽदेशं चाविचाल्य यथाऽऽदिष्टं तथा चरेत् ॥ 35 ॥
हासे कासे समुत्पन्ने करेणाच्छादयेन्मुखम् ।
तदन्ते मृदुभिर्वर्गैः स्वाभिप्रायं निवेदयेत् ॥ 36 ॥
विनीतः पुरतो भूयात् सज्जो वस्त्रादिबन्धनैः ।
भूजानुः साञ्जलिः श्रोतुं याचयेत् तु त्रिवारकम् ॥ 37 ॥
सत्कार्यं सर्वदा कुर्यान्निरहङ्कारचेतसा ।
त्रपया पापभीत्या संवृतो नववधूरिव ॥ 38 ॥
न विलासमयीं चेष्टां कुर्यात् शास्तरि संमुखे ।
अन्यच्चैवंविधं कर्म सुपरीक्ष्य त्यजेद् भृशम् ॥ 39 ॥
प्रतिष्ठायां मण्डले च होमे वा शिष्यसंग्रहे ।
आख्यानादौ गुरोर्वासे नित्यं कुर्याच्च सन्निधिम् ॥ 40 ॥
प्रतिष्ठादौ लभ्यते यत् तत्सर्वं गुरवेऽर्पयेत् ।
तेन दत्तं च गृह्णीयात् स्वयं चान्यांश्च तोषयेत् ॥ 41 ॥
गुरुशिष्ये स्वशिष्यत्वं न विदध्यात् कदाचन ।
स्वशिष्यं व्यावृतं कुर्यात् सत्कारादेर्गुरोः पुरः ॥ 42 ॥
आचार्यो यत्स्वयं दद्याद् गुर्वी यत् प्रदापयेत् ।
प्रणम्य धीमता ग्राह्यं बद्धाञ्जलिपुटेन तत् ॥ 43 ॥
अविस्मृतः सर्वचर्या यत्नात् कुर्वन् स्वबान्धवान् ।
अविस्मृतेर्निराकुर्यात् प्रेम्णा हृष्टेन चेतसा ॥ 44 ॥

अनुज्ञातो गुरोः कार्यं श्रद्धालुर्नाचरेद् यदि ।
रुग्णस्तु कुशले चित्ते नैनं भवति पापभाक् ॥ 45 ॥

किमन्यद्, गुरुतोषाय यच्छक्यं तत्समाचरेत् ।
चर्या कार्या प्रयत्नेन न कदाप्यवहेलयेत् ॥ 46 ॥

सर्वथा सर्वदा सिद्धिराचार्यस्यानुगामिनी ।
गुरुर्वज्रधरस्योक्तेराराध्यः सर्ववस्तुभिः ॥ 47 ॥

शिष्यः शुद्धाशयो भूत्वा त्रिरत्नं शरणं व्रजेत् ।
गुरोरधीत्यानुपठेत् कुर्यादुत्सर्गमेव च ॥ 48 ॥

ततो मन्त्रादिदानेन कृत्वा सद्धर्मपात्रकम् ।
पठेच्च धारयेच्चापि मूलापत्तीश्चतुर्दश ॥ 49 ॥

गुरुमनुगतशिष्यस्यानवद्यस्य कृत्वा
सकलसुहितवृद्धिं संचितं यन्मयेदम् ।
कुशलपदमनन्तं तेन वै सर्वसत्त्वाः
विजितसुगतभावा द्राक् सुसिद्धिं लभेयुः ॥ 50 ॥ ]

**इति गुरुपञ्चाशिका समाप्ता**

**विवरण**

सुप्रसिद्ध आचार्य महाकवि अश्वघोष की कृतियों में **गुरुपञ्चाशिका** का उल्लेख मिलता है। इसकी मूलमातृका संस्कृत में उपलब्ध नहीं थी। न्यू कैटलाग्स कैटलागरम्, भाग 5, पृष्ठ 72 की सूचनानुसार किन्हीं प्रकीर्ण पत्रों के आधार पर इसके 33 श्लोकों को श्री सिल्वाँ लेवी ने फ्रेंच अनुवाद के साथ 'AUTOUR d' AŚVAGHOṢA' शीर्षक से J.A. Vol. 215 ( Ju'y-Dec. 1929 ) pp. 259-263 में प्रकाशित किया, जिसे डॉ० बनारसी लाल ने कापी करके अपने संग्रह में रखा था। सौभाग्य से भारतीय उपाध्याय पद्माकर वर्मा तथा तिब्बती सम्पादक अनुवादक भिक्षु रत्नभद्र द्वारा किया हुआ इसका तिब्बती अनुवाद तो० नं० 3721 में सुरक्षित है और इस पर आचार्य चोंखापा जो की टीका भी उपलब्ध है, जो 'कलेक्टेड वर्क्स आफ चोंखापा भाग–क. पृ० 315' में प्राप्त है। इसी उपलब्ध तिब्बती साहित्य के आधार पर उक्त 33 श्लोकों को शुद्ध करके तथा शेष कोष्ठक में स्थित 17 श्लोकों का संस्कृत में रूपान्तर कर इस अत्यन्त महत्त्वपूर्ण ग्रन्थ को हम 'धीः' के पाठकों के समक्ष प्रस्तुत कर रहे हैं।

# लुप्त बौद्ध वचन संग्रह

— डॉ० बनारसी लाल —

[ 'धीः' के पूर्व अंकों में इसके अन्तर्गत लुप्तप्राय बौद्ध ग्रन्थों के वचनों का संग्रह किया जाता रहा है। इसी क्रम में इस अंक में आचार्य कमलशील द्वारा रचित भावनाक्रम में उद्धृत उन वचनों को संकलित किया गया है, जिन ग्रन्थों के वचनों का संग्रह पूर्व अंकों में भी किया जाता रहा। इस प्रसंग में आचार्य द्वारा रचित भावनाक्रम तथा उसमें उद्धृत तथागतगुह्यसूत्र की समीक्षा भी की गई है। ]

## आचार्य कमलशील एवं उनका भावनाक्रम

आचार्य कमलशील भोटनरेश ठिस्रोङ देचन् ( 742–798 ई० ) के शासनकाल में 792 ई० के आस-पास तिब्बत पहुँचे थे। उन दिनों भोट देश में चीनदेशीय भिक्षु 'ह्वशंग' का काफी प्रभाव था। आचार्य ने वहाँ पहुँच कर उनके मत का खण्डन कर बौद्ध धर्म के सही मन्तव्य को स्पष्ट किया। अपने मत को स्थापित करने के लिये आचार्य ने तब तीन भावनाक्रमों की रचना की। आचार्य द्वारा रचित 17 संस्कृत ग्रन्थों की हमें सूचना मिलती है ( भावनाक्रम—पृ० 133-134 )। इनमें शान्तरक्षित विरचित तत्त्वसंग्रह पर पञ्जिका एवं भावनाक्रम प्रमुख हैं। भावना-क्रम की संस्कृत पाण्डुलिपि प्रोफेसर जी० टुची को अपनी तिब्बत यात्रा के दौरान प्राप्त हुई थी। परन्तु वह अपूर्ण थी। इसमें केवल प्रथम एवं तृतीय क्रम ही था; जिसे उन्होंने 'माइनर बुद्धिस्ट टेक्स्ट्स' में प्रकाशित किया। सम्प्रति केन्द्रीय उच्च तिब्बती शिक्षा संस्थान से इसका प्रकाशन हुआ है, जिसके अनुपलब्ध संस्कृत अंशों को भोट भाषा के आधार पर पुनरुद्धार किये गये पाठों के साथ भिक्षु ग्यलछन नमडोल ने सम्पादित किया है।

जैसा कि बतलाया जा चुका है इस ग्रन्थ की पृष्ठभूमि में उस समय तिब्बत में प्रचलित 'ह्वशंग' के मत का निराकरण प्रमुख है। इसके तीनों क्रमों में धर्म के श्रवण एवं चिन्तन के द्वारा नैरात्म्य दृष्टि की प्राप्ति प्रतिपादित की गई है तथा उसके फल का भी विवेचन किया गया है। इसके लिये महाकरुणा की भावना तथा इस भावना के बल पर समस्त प्राणियों के लिये सम्बोधि प्राप्त करने हेतु बोधिचित्त उत्पन्न करने का विधान भी प्रतिपादित है।

यह ध्यान देने की बात है कि इसमें आचार्य ने प्रज्ञा एवं उपाय की युगनद्ध भावना करने के लिये बल दिया है। अनेक सूत्र ग्रन्थों के उद्धरण प्रस्तुत कर इसे महत्त्व प्रदान किया है। जैसे—"सा चेयं संक्षेपेण बोधिसत्त्वस्य प्रज्ञोपायरूपा प्रतिपत्तिर्न प्रज्ञामात्रं नोपायमात्रम्। यथा

आर्यविमलकीर्तिनिर्देशे—'प्रज्ञारहित उपाय उपायरहिता च प्रज्ञा बोधिसत्त्वानां बन्धनम्' इत्युक्तम् । उपायसहिता प्रज्ञा प्रज्ञासहित उपायो मोक्षत्वेन वर्णितः" ( भावनाक्रम, पृ० 171 ) । इस क्रम में आर्यगयाशीर्षसूत्र को भी प्रस्तुत किया गया है, जिसमें कहा है—"द्वाविमौ बोधिसत्त्वानां संक्षिप्तौ मार्गौ । द्वाभ्यां मार्गाभ्यां समन्वागता बोधिसत्त्वा महासत्त्वाः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यन्ते । कतमे द्वौ, उपायश्च प्रज्ञा च" ( भा० क्र०, पृ० 171-172 ) । इस प्रकार आचार्य की यह कृति न केवल 'ह्वशंग' के मत का निराकरण करती है, अपि तु मन्त्रनय और सूत्र के मध्य एक सेतु बन कर मन्त्रनय के लिये सुदृढ़ आधार प्रदान करती है ( भा० क्र०, पृ० 216–217 ) । परवर्ती तन्त्र ग्रन्थों में हम मन्त्रयान में प्रसिद्ध 'प्रज्ञोपाययोग' का विस्तृत विवरण पाते हैं । जैसे पद्मवज्र विरचित 'अद्वयविवरणप्रज्ञोपायविनिश्चयसिद्धि' में प्रश्न उपस्थित किया गया है कि क्या केवल प्रज्ञा मात्र से बुद्धत्व प्राप्त होगा या मात्र उपाय से ? इसके उत्तर में आचार्य ने यह मत प्रस्तुत किया है कि न केवल प्रज्ञा से और न ही मात्र उपाय से बुद्धत्व प्राप्त होगा, अपि तु दोनों की अभिन्न अर्थात् अद्वय रूप में भावना करने से भोग और मोक्ष दोनों की प्राप्ति होगी ( अष्टसिद्धिसंग्रह, पृ० 214 ) । इस प्रसंग में आचार्य ने प्रज्ञा एवं उपाय का विस्तृत विवेचन किया है ( गु० अ० सं०, पृ० 214–218 ) ।

आचार्य ने अपने ग्रन्थ में महायान सूत्रों से वचनों को उद्धृत किया है । इस प्रसंग में तथागत गुह्यक एवं तथागतगुह्यसूत्र के वचन भी हैं । तथागतगुह्यसूत्र के वचनों को पूर्व अंकों में भी संकलित किया गया है, अतः भावनाक्रम से भी उनको संकलित कर यहाँ दिया जा रहा है ।

## तथागतगुह्यसूत्र एवं गुह्यसमाजतन्त्र

महायान के वैपुल्य सूत्रों में नौ सूत्र ग्रन्थ प्रसिद्ध हैं । ये हैं–ललितविस्तर, सद्धर्मपुण्डरीक, लंकावतार, सुवर्णप्रभास, दशभूमिकसूत्र, समाधिराजसूत्र, गण्डव्यूहसूत्र, तथागतगुह्यक तथा दिव्यावदान । केवल नेपाल में ही नहीं, सभी महायानी परम्परानुयायियों में इन ग्रन्थों का आदर है । यह प्रसन्नता की बात है कि ये नौ ग्रन्थ अपने मूलरूप में संस्कृत में प्राप्त हैं । इन वैपुल्य सूत्रों में तथागतगुह्यक नाम से उद्धृत ग्रन्थ भी है । मिथिला विद्यापीठ, दरभङ्गा से प्रकाशित इन सूत्रों के अन्तर्गत गुह्यसमाजतन्त्र को तथागतगुह्यक के नाम से सम्मिलित किया है । इन वैपुल्य सूत्रों में सभी सूत्र ग्रन्थ हैं, इस प्रकार गुह्यसमाजतन्त्र को इसमें सम्मिलित करने से मन में दुविधा उत्पन्न होती है । इधर नेपाल के परम्परानुयायी विद्वानों ने भी गुह्यसमाजतन्त्र को ही तथागत-गुह्यक सूत्र मान लिया है ।

गुह्यसमाजतन्त्र तन्त्र-ग्रन्थ है । यह सप्तदश पटलात्मक है । इसमें अष्टादश पटल भी है, जो इस तन्त्र का उत्तरतन्त्र माना जाता है । बौद्ध तन्त्रों के अध्येताओं ने गुह्यसमाजतन्त्र के उत्तरार्ध–पूर्वार्ध दो विभाग माने हैं तथा तथागतगुह्यक को गुह्यसमाजतन्त्र का उत्तरार्ध माना है ।

तथागतगुह्यक नाम से बौद्ध सूचीपत्रों में इसकी मातृका की जो सूचना मिलती है, उसे देखने पर ज्ञात होता है कि वह गुह्यसमाज का उत्तरार्ध न होकर सम्पुटतन्त्र है। यह प्रश्न होता है कि क्या वैपुल्य-सूत्रों में गृहीत गुह्यसमाज या गुह्यसमाजतन्त्र उत्तरार्ध के नाम से प्राप्त तथागत-गुह्यक ही महावैपुल्य सूत्र है ?

लुप्त बौद्ध वचनों के संग्रह के क्रम में हमें इनके अतिरिक्त दो अन्य सूत्रग्रन्थों के वचन, जो तथागतगुह्यक या तथागतगुह्यसूत्र, इस स्वल्प नाम-भेद से उद्धृत हैं, प्राप्त हुए हैं। इन वचनों का संकलन 'धीः' 9, 10 एवं 11 वें अंकों में किया गया है। आचार्य शान्तिदेव के बोधिचर्यावतार की पञ्जिका तथा शिक्षासमुच्चय में आये उद्धरणों से मालूम पड़ता है कि तथागतगुह्यसूत्र नाम से एक पृथक् सूत्रग्रन्थ है, जिसमें बोधिसत्त्व का शान्तमति के साथ संवाद है। इसका भोट अनुवाद कन्ग्युर[1] संग्रह में प्राप्त होता है। इस सूत्र के चीनी अनुवाद की सूचना भी नान्जियो के सूचीपत्र से मिलती है। इस सन्दर्भ में ये परीक्षणीय हैं।

सौभाग्य से इस सूत्र की एक मात्र संस्कृत पाण्डुलिपि रायल एशियाटिक सोसायटी, बंगाल में उपलब्ध है। इसकी सूचना म० म० हरप्रसाद शास्त्री[3] के सूचीपत्र से मिलती है। इसकी पुष्पिकाओं से स्पष्टतया पता चलता है कि यही वैपुल्य सूत्रों का तथागतगुह्यसूत्र है। जैसे इसकी तृतीय पुष्पिका है—'महावैपुल्ये तथागतकायगुह्यपरिवर्ते तृतीयः'। अतः निर्विवाद रूप से कहा जा सकता है कि गुह्यसमाजतन्त्र को वैपुल्य सूत्रों में नहीं गिना जा सकता। तथागतगुह्यसूत्र के नाम से उपलब्ध ग्रन्थ ही महावैपुल्य सूत्रों में परिगणित है।

### अविकल्पप्रवेश

[4]लोकोत्तरेण ज्ञानेनाकाशसमतलान् सर्वधर्मान् पश्यति। पृष्ठलब्धेन पुनर्मायामरीचि-स्वप्नोदकचन्द्रोपमान् पश्यतीति।

### अविकल्पप्रवेश धारणी

[5]अमनसिकारतो रूपादिनिमित्तं वर्जयति।

---

1. आर्यतथागताचिन्त्यगुह्यनिर्देश नाम महायानसूत्र–तो. 47.
2. A Catalogue of the Chinies Translation of Buddhist Tripitaka -23 (3) p. 10
3. Descriptive Catalogue of Sanskrit Manuscripts, Asiatic Society of Bengal—Vol. I, PP. 17. MS No. 10765.
4. भावनाक्रम, पृ० 230.
5. भावनाक्रम, पृ० 187.

## तथागतगुह्यसूत्र

( १ )

[1]ज्ञानसम्भारः सर्वक्लेशप्रहाणाय संवर्तते। पुण्यसम्भारः सर्वसत्त्वोपजीवितायै संवर्तते। तस्मात् तर्हि भगवन्! बोधिसत्त्वेन पुण्यसम्भारे च सर्वदाऽभियोगः करणीयः।

( २ )

[2]इमौ च प्रज्ञोपायौ बोधिसत्त्वानां सर्वपारमितासंग्रहाय संवर्तेते, इति।

( ३ )

[3]नैकान्तनिरालम्बनं चित्तमात्रसेवनं कर्तव्यम्, अपि तु उपायकौशल्यमपि सेवनीयमिति प्रदर्शनार्थमुक्तम्—तद्यथापि नाम कुलपुत्र! अग्निरुपादानाज्ज्वलति, अनुपादानः शाम्यति; एवमेवारम्भणं चित्तं ज्वलति अनारम्भणं शाम्यति। तत्रोपायकुशलो बोधिसत्त्वः प्रज्ञापारमितापरिशुद्धारम्भणोपशममपि जानाति, कुशलमूलारम्भणं·······चोत्थापयति। शून्यतारम्भणं च प्रत्यवेक्षते सर्वसत्त्वमहाकरुणारम्भणं च प्रेक्षत इति हि कुलपुत्र! उपायकुशलः प्रज्ञापारमितापरिशुद्धो बोधिसत्त्वोऽनारम्भणे वशितां प्रतिलभते।

( ४ )

[4]नास्ति तत् किञ्चिद् आरम्भणं बोधिसत्त्वस्य यत् सर्वज्ञज्ञानाभिनिर्हाराय न संतिष्ठते। यस्य बोधिसत्त्वस्य सर्वारम्भणानि बोधिपरिणामितानि, अयं बोधिसत्त्व उपायकुशलः सर्वधर्मान् बोध्यनुगतान् पश्यति। तद्यथापि नाम कुलपुत्र! नास्ति तत् त्रिसाहस्रमहासाहस्रे लोकधातौ यत् सत्त्वानाम् उपभोगाय न स्यात्। एवमेव कुलपुत्र! नास्ति तत् किञ्चिद् आरम्भणं यद् उपायकुशलो बोधिसत्त्वो बोधाय चोपकारीभूतं न पश्यति।

## हस्तिकक्ष

[5]न कश्चिल्लभ्यते भावो यस्योत्पादस्य संभवः।
असंभवेषु धर्मेषु बालः सम्भवमिच्छति॥



1. भावनाक्रम, पृ० 231.
2. भावनाक्रम, पृ० 233.
3. भावनाक्रम, पृ० 242.
4. भावनाक्रम, पृ० 242-243.
5. भावनाक्रम, पृ० 177.

# बौद्ध पारिभाषिक शब्दों का अभिप्राय

—ठिनलेराम शाशनी—

[ 'धीः' के इस अंक में आचार्य रत्नाकर शान्ति विरचित महामायातन्त्र की टीका ( गुणवती ) से विशिष्ट पारिभाषिक शब्दों की व्याख्याएँ संकलित की गई हैं। महामायातन्त्र संस्कृत में अप्राप्त है। टीका और तिब्बती अनुवाद के आधार पर इसका पुनरुद्धार हो चुका है। यह ग्रन्थ सटीक शीघ्र ही दुर्लभ बौद्ध ग्रन्थ शोध योजना से प्रकाशित हो रहा है। ]

**अकनिष्ठभूमिः**

त्रीणि ध्यानानि प्रत्येकं त्रिभूमिकानि, चतुर्थमष्टभूमिकम्। तस्याष्टमी भूमिरकनिष्ठम्।
( म० त० टी०, पृ० 32 )

**अक्षराक्षरम्**

अक्षयत्वादक्षरश्चित्तवज्रस्तस्य गुह्याक्षरम् अक्षराक्षरम्।
( म० त० टी०, पृ० 29 )

**अभिज्ञा**

तिस्रोऽभिज्ञाः—ऋद्धिः, परचित्तज्ञानम्, आश्र(स्र)वक्षयज्ञानं च।
( म० त० टी०, पृ० 23 )

**अमृतम्**

मुक्तत्वादविनाशित्वान्महासुखत्वाच्चामृतम्। ( म० त० टी०, पृ० 17 )

**इन्द्रजालम्**

इन्द्रजालं सैन्यादीनां निर्मापनं(णम्), दर्शनमन्तर्धानं च यथायोगं सदसताम्।
( म० त० टी०, पृ० 11 )

**उच्चाटनम्**

उच्चाटनं स्थानत्याजनम्। ( म० त० टी०, पृ० 11 )

**उच्छ्वासम्**

उच्छ्वासं प्राणवायोरूर्ध्वगमनम्। ( म० त० टी०, पृ० 25 )

**उपवासः**

तत्रोपवासोऽनशनम्। ( म० त० टी०, पृ० 13 )

**कर्णिकागूढगोचरः**

नाभिकमलस्य कर्णिकायां गूढगोचरः कर्णिकागूढगोचरः । गूहनं गूढं गुप्तिः, तदर्थो गोचरः पात्रं गूढगोचरः, रविशशिनोः संपुट इत्यर्थः । ( म० त० टी०, पृ० 14 )

**गुप्तम्**

बालेषु गोपितम् । केन ( काभिः ) अभूतरूपसंदर्शिनीभिर्भ्रान्तिभिः । कीदृशम् ? अवाग्गोचरत्वादप्रकाश्यम् । मनोजल्पाविषयत्वादनक्षरम् ।
( म० त० टी०, पृ० 33 )

**गुह्यम्**

गुह्यमप्रकाश्यत्वात् । गुह्यतेऽनेन देवतातत्त्वमिति वा गुह्यम् ।
( म० त० टी०, पृ० 25 )

**गुह्येश्वरी**

अत्र पञ्चकुलानि पञ्चगुह्यानि, तेषामीश्वर्यः सृष्टिसंहारकारिकाः । तत्र तथागतकुलस्येश्वरी बुद्धडाकिनी, वज्रकुलस्य वज्रडाकिनी, मणिकुलस्य रत्नडाकिनी, पद्मकुलस्य पद्मडाकिनी, कर्मकुलस्येश्वरी विश्वडाकिनी । तासामपीश्वरी महामाया ।
( म० त० टी०, पृ० 3-4 )

**चतुर्विधो दुर्गः**

विकल्प एव चतुर्विधो दुर्गः । ( म० त० टी०, पृ० 16 )

**चित्तमचित्तम्**

चित्तं विज्ञानम् । सन्त्येकपदान्यवधारणानि । तद्यथाऽम्मात्रभक्षोऽब्भक्षः, वायुमात्रभक्षो वायुभक्ष इत्युच्यते; एवमिहापि विज्ञानव्यतिरिक्तस्यार्थस्य ग्राह्यस्याभावाच्चित्तमात्रं विश्वमिति चित्तशब्दस्यार्थः । तदपि चित्तमचित्तम् । कस्माच्चित्तम् ? ग्राह्याभावात् । कस्माच्चि(दचि)त्तम् ? ग्राह्याभावे ग्राहकस्याप्यभावात् । अथ ग्राहकं हि लोके विज्ञानं प्रसिद्धम् । विज्ञानमेव चेह चित्तम् । तस्माच्चित्तं च तदचित्तं चेति चित्ताचित्तम् । ( म० त० टी०, पृ० 14 )

योऽसाविन्दुर्धवलः सूक्ष्मबिन्दुः, स चित्तम्, अन्तःप्रकाशमानत्वात् । या पुनस्तन्मात्रे चित्तस्यावस्थितिः, सा चित्तव्यतिरिक्तार्थानुपलम्भाच्चित्तमात्रता । या तस्य ग्राह्याभावादग्राहकता, सा तस्याचित्तता । अत एवासौ शून्यरूपः ।
( म० त० टी०, पृ० 18 )

**चिद्रूपम्**

चेतनं चित्, ख्यातिः प्रकाशः प्रतिभासनं स्फुटत्वम्, अपरोक्षतेति यावत्। सा रूपमस्येति चिद्रूपम्। चिद्रूपत्वेन चित्त्वलक्षणेन योगाच्चित्तं तदित्यर्थः।

( म० त० टी०, पृ० 14 )

या पुनस्तस्य प्रकाशमानता सा चिद्रूपता। ( म० त० टी०, पृ० 18 )

**जम्भनम्**

जम्भनं मूकीकरणम्। ( म० त० टी०, पृ० 12 )

**ज्ञानम्**

ज्ञानमिति ज्ञानतत्त्वमद्वयं वीराख्यम्। ( म० त० टी०, पृ० 33 )

**तत्त्वम् ( अनुत्तरम् )**

तत्त्वेति। सर्वप्रपञ्चरहितं ज्ञानमित्यर्थः। बोधिसत्त्वानामपीदृशं ज्ञानमस्ति। तत्तु बुद्धज्ञानेन सोत्तरम्, ततो विशेषणार्थमाह—अनुत्तरमिति। नास्मादुत्तरमस्तीत्यनुत्तरम्। ( म० त० टी०, पृ० 42 )

**तथागताः**

तथताधिगमात् तथागता बुद्धबोधिसत्त्वाः। ( म० त० टी०, पृ० 22 )

**तन्त्रम् ( त्रिविधम् )**

तन्त्रमिति प्रबन्धम्। त्रिविधं तन्त्रम्—हेतुतन्त्रम्, फलतन्त्रम्, उपायतन्त्रं च। तत्र प्रकृतिप्रभास्वरमनादिनिधनं चित्तं बोधिचित्तम्, सहेतुस्तद्बीजम्। कस्य बीजम्? बोधेः। सम्यक्संबोधिः फलम्, निरुत्तरफलत्वात्। सा पुनस्तस्यैव प्रकृतिप्रभास्वरस्य चित्तस्यागन्तुकसर्वावरणक्षयलक्षणा विशुद्धिः। सा बुद्धानां धर्मकायः, संभोगनिर्माणकायसंगृहीतानामनन्तानां बुद्धधर्माणामाश्रय इत्यर्थः। सैव बुद्धानां बोधिधर्मकायो महावज्रधरपदम्। तस्माद्धेतोस्तस्य फलस्य परिनिष्पत्तये साधनमुपायः। स पुनर्बोधिसत्त्वानां त्रिकल्पासंख्येयभावितः सपरिकरो मार्गः। मन्त्रयानेऽत्र तस्यैवातिमहतो बोधिमार्गस्य संक्षेपरूपः, क्षिप्रतरं सुखतरं च बोधिसाधनो मण्डलचक्राद्याकारः सपरिकरो मार्ग उपायः। एतान् हेतुफलोपायानधिकृत्य ये देशनाप्रबन्धास्ते यथाक्रमं हेतुतन्त्रं फलतन्त्रमुपायतन्त्रं वा।

( म० त० टी०, पृ० 2-3 )

**द्रव्याणि**

द्रव्याणि समयवस्तूनि। ( म० त० टी०, पृ० 43 )

समयं विना न सिद्धयः ।·····द्रव्यमिति समयद्रव्यम् । ( म० त० टी०, पृ० 40 )

**धर्माः**

स्वलक्षणधारणा धर्माः, सर्ववस्तूनीत्यर्थः । ( म० त० टी०, पृ० 8 )

**पञ्चकामगुणाः**

अप्राप्ताः काम्यन्तेऽभिलष्यन्त इति कामाः, प्राप्ता गुण्यन्ते पुनर्भुज्यन्त इति गुणाः, कामाश्च ते गुणाश्चेति कामगुणाः, प्रणीता रूपशब्दगन्धरसस्पर्शाः ।

( म० त० टी०, पृ० 21 )

**पञ्चज्ञानिनः**

पञ्चज्ञानान्येषाम्—आदर्शज्ञानम्, समताज्ञानम्, प्रत्यवेक्षणाज्ञानम्, कृत्यानुष्ठानज्ञानम्, सुविशुद्धधर्मधातुज्ञानं चेति । तत्रादर्शज्ञानमादर्शवन्निर्मलमनन्तं शाश्वतं च मध्यवर्तिनो ज्ञानत्रयस्याश्रयः, सर्वेषां ज्ञानान्तराणां प्रतिबिम्बोदयस्थानम्, येन प्रतिबिम्बोदयेन तथागताः सर्वाकारसर्वधर्मदर्शिनो भवन्ति । समताज्ञानं सर्वसत्त्वेष्वात्मनिर्विशेषताज्ञानं सदा महामैत्री-महाकरुणासम्प्रयुक्तम् । प्रत्यवेक्षणाज्ञानं सर्वज्ञेयेष्वव्याहतं सर्वसमाधिधारणीनां निधानं धर्ममण्डलेषु सर्वासां स्वविभूतीनां निदर्शकम्, महाधर्मवृष्टीनां प्रवर्षकम् । येन ज्ञानेन तथागताः सर्वलोकधातुष्वनन्तैः कायवाक्चित्तनिर्माणैः प्रतिक्षणमनन्तानां सत्त्वानामर्थं कुर्वन्ति, तदेषां कृत्यानुष्ठानज्ञानम् । येन ज्ञानेन तथागताः सर्वधर्मतथतां सुविशुद्धां पश्यन्ति, तन्मात्रदर्शनात्, सर्वनिमित्तमलानामत्यन्तमप्रख्यानात्, तदेषां सुविशुद्धधर्मधातुज्ञानम् । आद्यानि त्रीणि ज्ञानानि संभोगकायः, चतुर्थः निर्माणकायः, पञ्चमं धर्मकायैकदेशः । ( म० त० टी०, पृ० 9 )

**पञ्चपूजोपहाराः**

उपह्रियन्त इत्युपहाराः पुष्पधूपदीपगन्धनि(नै)वेद्यानि । ( म० त० टी०, पृ० 20 )

**पातालगमनम्**

पातालगमनं बिलप्रवेशः । ( म० त० टी०, पृ० 12 )

**पिण्डम्**

पिण्डमिति तान्येवात्यन्तपिण्डनात् सुसूक्ष्मीकरणात् पिण्डं बिन्दुमात्रं सर्षपसूक्ष्ममित्यर्थः । एतेन वीरस्य मुद्रारूपं प्रसाधितम् । ( म० त० टी०, पृ० 34 )

**प्रकृतिप्रभास्वराः**

प्रकृतिर्निजः स्वभावः, तया प्रभास्वराः प्रभासनशीलाः, प्रकर्षेण निर्मला इत्यर्थः ।·········यस्मादादिशुद्धास्तस्मात् प्रकृतिप्रभास्वरास्त्रिभिः कार्य(यै)स्तस्मात्

प्रकृतिप्रभास्वराः।…………प्रकृतिप्रभास्वरत्वं चित्तस्य बोधेर्हेतुः, बोधिः फलम्। स (सा) पुनर्बोधिः सवासनसर्वावरणक्षयादात्यन्तिकी चित्तसन्तानस्य विशुद्धिः, सैव धर्मकायः। संभोगनिर्माणकायसंगृहीतानां धर्माणां कायो वास आश्रय इति कृत्वा। ( म० त० टी०, पृ० 7–9 )

**प्राणायामः**

प्राणायाममिति उच्छ्वासनिश्वासौ। ( म० त० टी०, पृ० 32 )

**प्रातिहार्यम्** ( त्रिविधम् )

प्रति प्रति ह्रियन्ते आवर्ज्यन्तेऽनेन सत्त्वा इति प्रतिहार्यम्, स्वार्थेऽण् प्रातिहार्यम्। तच्च त्रिविधम्—ऋद्धिप्रातिहार्यम्, आदेशनाप्रातिहार्यम्, अनुशासनीप्रातिहार्यं च। ( म० त० टी०, पृ० 23 )

**बुद्धशासनम्**

येन यानेन बुद्धो भवति तद् बुद्धशासनम्, महायानमित्यर्थः। (म० त० टी०, पृ० 16)

**ब्रह्माण्डम्**

"बृह बृहि वृद्धौ" ( 735–736 भ्वा० ), मनिन्। नैरुक्तो वर्णविकारः। एवं ब्रह्मेति भवति। इह तु सर्वलोकगुरुत्वात् सर्वतो वृद्धा इति ब्रह्माणस्तथागताः संभोगनिर्माणकायसंगृहीताः। तेषामण्डमुत्पत्तिस्थानम्, धर्मकाय इत्यर्थः। अथवा मोक्षातिशयत्वाद् ब्रह्म च तत् कायद्वयोत्पत्तिस्थानत्वादण्डश्चेति ब्रह्माण्डं धर्मकाय इत्यर्थः। ( म० त० टी०, पृ० 4 )

**मद्यम्**

मद्यमिति मद्याकर्षणम्। ( म० त० टी०, पृ० 22 )

**मन्त्रयानम्**

गम्भीरमहायाने, मन्त्रयान इत्यर्थः। पारमितानयविलक्षणो हि मन्त्रनये बोधिचित्तस्य मुद्राकारः परिच्छेदश्च क्षिप्रतरं बोधिसाधनो भाव्यते। ( म० त० टी०, पृ० 16 )

**महामाया**

महामायाशब्देन भगवतो वज्रधरस्य परमरहस्या मूर्तिर्भगवान् हेरुक उक्तः। ( म० त० टी०, पृ० 5 )

हेरुकरूपा महामाया। ( म० त० टी०, पृ० 6 )

योगमातेति महामाया। ( म० त० टी०, पृ० 10 )
मायेति महामाया। ( म० त० टी०, पृ० 12 )

**महासमयसिद्धिः**

समयो देवता। समण्डलो मण्डलाधिपतिर्महासमयः। तस्य सिद्धिर्निष्पत्तिः।........ सा सिद्धिर्महागुलिकासाधनम्। ज्ञानबिन्दुर्गुलिका, चतुर्बिन्दुः परिवारः, मध्यबिन्दुर्महागुलिका, तया साधनं निष्पादनम्, महासमयस्य सिद्धिः।
( म० त० टी०, पृ० 20 )

**मारणम्**

मारणं रत्नत्रयादेरत्यन्तापकारिणाम्। ( म० त० टी०, पृ० 11 )

**मारः**

कामेश्वरो मारः। ( म० त० टी०, पृ० 29 )

**मुद्रा**

मुद्रामिति रविसोमसम्पुटाम्। ( म० त० टी०, पृ० 32 )

**मोहनम्**

मोहनं मूर्च्छासंजननम्। ( म० त० टी०, पृ० 11 )

**योगनिद्रा**

एकान्तर्निर्विक्षेपत्वेन निद्रा साधर्म्यान्निद्रेव निद्रा, योगश्चासौ निद्रा च योगनिद्रा।
( म० त० टी०, पृ० 33 )

**योगसंवरम्**

कर्मभिराश्लेषचुम्बनादिभिर्योगसंवरं कारयेत्। योगश्च संवरं च योगसंवरम्। तत्र नाभिकमलकर्णिकारविसोमसम्पुटगतसितसूक्ष्मबिन्दुर्योगः। संवरं सुखवरं महासुखं प्रतिवेधविचारणानन्तरं कर्म। तत्र संवरं गुह्यपूजा रत्नपूजा च।
( म० त० टी०, पृ० 20-21 )

**योगः** ( त्रिविधः )

मन्त्रसंस्थानधर्मात्मा योगस्त्रिविध उच्यते। ( म० त० पृ० 27 )
तत्त्वालम्बनसमाधिर्योगः। स योगस्त्रिविधस्त्रिप्रकारः। कुतः ? यस्मान्मन्त्रसंस्थानधर्मात्मा। तत्त्वद्योतकं वचनं मन्त्रः, देवतामूर्तिः संस्थानम्, मन्त्रार्थज्ञानं धर्मः।
( म० त० टी०, पृ० 27 )

योगः श्रीहेरुकः। ( म० त० टी०, पृ० 31 )
योगो रविसोमसम्पुटे बिन्दुयोगः। ( म० त० टी०, पृ० 35 )

**वज्रचक्षुः**

चक्षुर्वज्रं वज्रचक्षुः, दिव्यचक्षुरभिज्ञेत्यर्थः। ( म० त० टी०, पृ० 41 )

**वज्रचित्तम्**

चित्ताख्यमिति वज्रचित्तम्, परचित्तज्ञानमित्यर्थः। ( म० त० टी०, पृ० 42 )

**वज्रडाकिनी**

"डै वैहायसगमने" ( 968 भ्वा० ), ऐकारस्यात्वम्। डानं डाः, आकाशगमनमित्यर्थः। डाशब्दात् तृतीया। "अक अग कुटिलायां गतौ" (792-793 भ्वा०)। अत्र सर्वतो गमनं कुटिला गतिः। डा अकितुं शीलमस्या इति डाकिनी, सा ह्याकाशकोटीनियुतशतसहस्रैर्युगपत् सर्वतो गामिनीत्यर्थः। तथा चोक्तम्—

डै वैहायसगमने धातुरत्र विकल्पितः।
सर्वाकाशचर(री) सिद्धिर्डाकिनीति प्रसिद्ध्यति॥ इति।

वज्रग्रहणं बाह्यडाकिनीव्यवच्छेदार्थम्। वज्रमशनिः, अप्रपञ्चज्ञानमयत्वात्; डाकिन्यश्चेति वज्रडाकिन्यः। ( म० त० टी०, पृ० 3 )

**वज्रयोगिन्यः**

वज्रो हेरुकः, योगिन्यः पञ्चडाकिन्यः। ( म० त० टी०, पृ० 31 )

**वश्याकर्षणकर्माणि**

वशं गतो वश्यः। इह तु वश्यार्थं कर्म वश्यमुक्तम्। आकर्षणे द्वे—पादाकर्षणं पिण्डाकर्षणं च। प्रथमं भूम्या, द्वितीयम् आकाशेन। त्रीण्येतानि कर्माणि वश्याकर्षणकर्माणि। ( म० त० टी०, पृ० 11 )

**विद्या**

निरुत्तरज्ञानस्वभावत्वाद् विद्या। इयं महामायाख्या विद्या साधकानां त्रैलोक्यं साधयति। ( म० त० टी०, पृ० 6 )

विद्या महामाया। ( म० त० टी०, पृ० 11 )

विद्याशब्देन भावनामयी प्रज्ञोच्यते। सा पुनर्मूर्तिभावनापरिनिष्पत्तिरूपं स्वदेवताकारस्यात्मनः परिस्फुटं दर्शनम्। ( त० त० टी०, पृ० 13 )

**विद्वेषणम्**

अन्योन्यमनुरक्तयोरपि विद्वेषणं विद्वेषः। ( म० त० टी०, पृ० 12 )

**वीरः**

निरुत्तरवीर्ययोगाद् वीरो वज्रसत्त्वः। ( म० त० टी०, पृ० 14 )

महासुखचित्तरूपः सितबिन्दुर्वीरः। ( म० त० टी०, पृ० 17)

वीरः श्रीहेरुकः । ( म० त० टी०, पृ० 21 )
सिंहो वीरः । ( म० त० टी०, पृ० 32 )

**व्रतम्**

व्रतं मौनस्नानभक्ष्यादिनियमः । ( म० त० टी०, पृ० 27 )

**शुक्रः**

विशुद्धज्ञानरसः सितसुखद्रवरूपत्वेन शुक्रसाधर्म्यात् शुक्रशब्देनोक्तः । (म० त० टी०, पृ० 17 )

**सप्तलोकाः**

पातालं भूः स्वर्गः प्रथमं ध्यानं द्वितीयं तृतीयं चतुर्थमिति सप्तलोकाः । ( म० त० टी०, पृ० 32 )

**संवरः**

संवरस्तीव्ररागस्यापि गृहिणो ब्रह्मचर्यः(र्यम्) । ( म० त० टी०, पृ० 13 )

**सूक्ष्मयोगः**

अयं चास्य वज्रधरस्य सूक्ष्मज्ञानमुद्राकारः । श्रीसमाजेऽप्युक्तम्—
आकाशधातुमध्यस्थं भावयेच्चन्द्रमण्डलम् ।
बुद्धबिम्बं विभावित्वा सूक्ष्मयोगं समारभेत् ॥
नासाग्रे सर्षपं चिन्तेत् सर्षपे सचराचरम् ।
भावयेज्ज्ञानपदं रम्यं रहस्यं ज्ञानकल्पितम् ॥ ( 6.8-9 )
श्रीवज्रामृतेऽप्ययमस्य सूक्ष्मयोगः साधारः सकर्मक उक्तः—
तिष्ठते निश्चलं विद्या अमृतं ध्यानमारभेत् ।
ध्यायते परमं तत्त्वममृतं बिन्दुरूपिणम् ॥
खमध्ये शशिसंकाशं शून्यतत्त्वमुदाहृतम् ।
अक्षयमव्ययं सूक्ष्मं वज्रसत्त्वमनाहतम् ॥
नाभिमध्ये स्थितो देवः कर्णिकागूढगोचरे ।
स्रवते शुक्ररूपेण भगलिङ्गान्तरे स्थितः ॥ इति ।
( म० त० टी०, पृ० 18 )

**सोमपानम्**

सोमपानममृतपानम् । ( म० त० टी०, पृ० 23 )

**स्तम्भनम्**

स्तम्भनं निष्पन्दीकरणम् । ( म० त० टी०, पृ० 11 )

